'करउ' [प० १४-१] **इति सप्तमी स्यात् पञ्चम्यथवा'** इति। 'करउ' इति विध्यर्थः। यतः अज्ञातज्ञापनं विधिः। तत्र सप्तमी-पञ्चम्यौ प्रयोज्ये । 'विध्यादिषु सप्तमी च' इत्यनेने-त्यर्थः। तद्यथा—'धर्म्मु करउ'—धर्म्मं कुर्यात्, करोतु वा। 'संसारु अनित्यु देखउ'—संसार-मनित्यं पश्येत्, पश्यतु वा। 'सवहि उपकारिआ होउ'—सर्वेषामुपकारी भूयात्, भवतु वा।
5 एवमन्येऽपि ॥ छ ॥

**'तथैव मायोगे ह्यस्तन्यद्यतनी वा'** इति। मा स्म योगे वा (?) 'मायोगेऽद्यतनी'; 'मास्मयोगे ह्यस्तनी च' इत्येताभ्यामित्यर्थः। यथा—'जणे हो सो भाजया जुनु याथि'—मा ह (?भ०)वत् सा भार्या यस्याः पुत्रो नास्ति, मा भूद् वा । 'सो पूतै जणिं जाम जो निर्गुणु हो'—स पुत्र एव मा जायत, मा स्म जनिष्व वा, यो निर्गुणो भवति। 'ते गुणै जणिं उपजति
10 जे सवहि न उपकरति'—ते गुणा एव मोत्पद्यन्त, मा स्म वा, ये सर्वस्य नोपकुर्वन्ति । 'पपु जणि करसि'—प(?पा०)पं मा करोः, मा स्म कार्षीर्वा। 'सत्त मार्ग्गु जणि छाटसि'—सन्तं मार्ग्गं मा त्यजः, मा स्म त्याक्षीर्वा। एवमन्येऽपि ॥ छ ॥

**'स्सेनातीतेऽपि चाद्या स्यात्'** इति। आद्या=वर्तमाना। न केवलं[प० १४-२]—वर्त्तमाने, अतीतेऽपि। किन्तु स्सेन स्स-शब्देनाऽव्ययेन योगे। यथा—'बहुतु राजा एथुं भुइं भय'—बहवो
15 राजानो अत्र भूमौ भवन्ति स्म, बभूवुर्वा। 'तेहू(ह्व० ?) करिं सभां बहुतु पु(गु०)णिआ भए सूंवति'—तेषां कृतासु सभासु, तदीयासु वा, बहवो गुणिनो भूता[ः] श्रूयन्ते स्म, शुश्रुविरे वा। 'तेह्व मारा (०ज्झ ?) कालिदास माघ किरात प्रभृति केतौ एक खातिं गए'—तेषां मध्ये कालि-दास-माघ-किरातप्रभृतयः कियन्त एके ख्यातिं गच्छन्ति स्म, जग्मुर्वा। एवमन्येऽपि ॥ छ ॥

एतच्च त्यादिविभक्तीनां प्रयोगेषु दिङ्मात्रं दर्शितं ग्रन्थविस्तरभयात् । अनेनैव क्रमेण
20 ज्ञातत्यादिभिः प्रथम-मध्यम-उत्तमपुरुषेषु, एकवचन-द्विवचन-बहुवचनेषु कर्तृ-कर्म-भावोक्तिषु कालत्रयेऽपि प्रयोगा ऊह्या इति ॥ छ ॥

अथ कार्त्तानामुक्तिभेदं दर्शयितुं आर्याचतुष्कमाह—

**अथ शन्तृङानशाविह विज्ञेयौ 'करत आछ' इत्युक्तौ ।** [प० १५-१]
**'करि आछ' इति क्त्वा, णम् 'करि करि आछ' प्रयोज्यः स्यात् ॥१४**
25 **'करवें आछ' तुम् भवेत्, यदि वाऽयं 'करण या' इतीहोक्तौ ।**
**शेषास्त्वनुदितभेदाः 'कर' इत्युक्तौ वुणाद्या ये ॥ १५ ॥**
**निष्ठा-क्वन्सुप्रमुखा अतीतकालोदितास्तु ये कार्त्ताः ।**
**तेषामुक्तिः 'किएसी' त्येषैव हि सर्व्वदा ज्ञेया ॥ १६ ॥**

**शश्राणौ(°नौ) तु स्य-युतौ विज्ञेयौ 'करणिहार आछे'ति ।**
**व्यापारोक्तेरन्ते वश्चेत् कृत्यास्तदा[1] योज्याः ॥ १७ ॥**

'**अथ शन्तृङानशाविह**' इति । यथा – 'धर्मु करत आछ' – धर्मं कुर्वन्नास्ते, स्त्री तु कुर्वन्ती, कुलं[2] तु कुर्वत् । 'आनोऽत्रात्मने' – तेनात्मनेपदविषय एव । धर्मं कुर्वाण आस्ते, कुर्वाणा वा, कुर्वाणं वा । 'न निष्ठादिषु' इति षष्ठीनिषेधः । एवं 'पठन[3] करत आछ, पढत आछ' – 5 पठन्नास्ते, पठन्ती वा, पठद् वा । 'गमन करत आछ, यान्त आछ' – गच्छन्नास्ते, गच्छन्ती वा, गच्छद् वा । यान् वा, यान्ती वा, याद् वा । 'भोजन करत आछ, जेंवत आछ' – भुञ्जान आस्ते, भुञ्जाना वा, भुञ्जानं वा । [प० १५-२] धिवि जिवि प्रीणनार्थो इत्यनेन तु जिम्वन्नास्ते, जिम्वन्ती वा, जिम्वद् वा । एवमन्येऽपि ॥ छ ॥

'**करि आछ इति क्त्वा**' इति । 'एककर्तृकयोः पूर्वकाले' इति । पूर्वापरकालोपलक्षणमेतत् । 10 तच्च यथा – 'धर्मु करि आछ' – धर्म्मं कृत्वा आस्ते । 'हाइ देउ पूजि, वम्हणह(°न्ह?) दानु देइ, जेंव' – स्नात्वा, देवं पूजयित्वा, ब्राह्मणेभ्यो दानं दत्त्वा जिम्वति, भुङ्क्ते वा, भुक्तवान् वा, भो( भु° ? )ज्यते वा । 'पढि पांडे भा' – पठित्वा पण्डितो भूतः, अधीत्य वा । 'ओलगि सुखि आहोन्त आछ' – अवलग्य सुखी भवन्नास्ते, भविष्यति वा, भूतो वेति । एवमन्येऽपि ॥ छ ॥

'**णम्, 'करि करि आछ' प्रयोज्यः स्यात्**' । 'णम्' प्रत्ययः पुनः क्त्वार्थ एव [4]प्रयुज्यते; 15 परमाभीक्ष्ण्ये । 'णम् चाभीक्ष्ण्ये द्विश्च पदम्' इति वचनात् । यथा – 'करि करि आछ' – कारं कारमास्ते, कृत्वा [5]कृत्वेत्यर्थः । 'भुंजि भुंजि या' – भोजं भोजं व्रजति, याति वा । 'देखि देखि[6] तूस' – दर्शं दर्शं तुष्यति । 'लै लै पला' – आदायमादायं पलायते । 'मारि मारि खा' – मारं मारं खादति । 'सोंअरि सोंअरि रोवा' – स्मारं स्मारं रोदति । एवमन्येऽपि ॥छ॥

'**करवें आछ' तुम् भवेत्** । 'वुण्-तुमौ क्रियायां क्रियार्थायाम्' । [प० १६-१] तद्यथा – 20 'धर्मु करवें किंहं(°ह ?) आछ' – धर्म्मं कर्तुमास्ते । 'पढवें किंह आछ' – पठितुमास्ते । 'गांउं जावें किंह संजव' – ग्रामं गन्तुं संयमयति । यमच परिवेषणे ॥ छ ॥

'**यदि वा**' इति । अयं तुम् । यथा – 'करण या' – कर्तुं याति । 'पढण आव' – पठितु-मागच्छति । आवाति वा । वा गति-गन्धनयोः । 'जेंवण दे' – जिम्वितुं ददाति, भोक्तुं वा । एवमन्येऽपि ॥ छ ॥ 25

'**शेषास्त्वनुदित**' इति । अनुदितभेदा अप्रसिद्धोक्तिविशेषा ये केचन कथितेभ्यः अवशिष्टाः सन्ति ते '**कर इत्युक्तौ**' = वर्त्तमानोक्तावित्यर्थः, प्रयोज्या इति शेषः । ते च **वुणाद्याः** = वुण्-तृजादयः । 'पाक कर' – पाकं करोति, पाकस्य कर्त्ता वा, पाकस्य करो वा । एवं 'देवता

---

1 कार्या सदा । 2 कुंभं । 3 पवन° । 4 भोज्यते । 5 कृत्से° । 6 देषि देषि वूस ।

दर्शन कर, देउ देख' – देवस्य द्रष्टा वा दर्शको वा । 'ग्राम गमन कर, गाउं जा' – ग्रामस्य गन्ता, गमको वा; याता वा । एवमन्येऽपि यथादर्शनं प्रयोज्याः ॥ छ ॥

**'निष्ठा-क्वन्सुप्रमुखा'** इति । ह्यस्तन्यादिवदित्यर्थः । तद्यथा – 'भातु भोजनु किएसि, जेंवेसि' – भक्तं भुक्तः, भुक्तवान् वा, बुभुजानो वा; ओदनं वा । स्त्री तु भुक्ता, भुक्तवती । बुभुजाना[1] वा । 'शास्त्रु किएसि' – शास्त्रं कृतः[2], कृतवान्, चकृवान् । [प० १६-२] चक्राणो वा । स्त्री तु कृता[3], कृतवती, चकुषी, चक्राणा वा । 'कलाव ला(जा०?)णेसि' – कलापं वित्तः, विद्वान् वा; स्त्री तु वित्ता, विदुषी वा । कुलं तु वित्तं, विद्वद् वा । एवमन्येपि ॥ छ ॥

**'शन्त्राणौ(नौ) तु स्य-युतौ'** इति । 'शन्त्राणौ(नौ) स्य-संहितौ शेषे च' इत्यनेनेत्यर्थः । तद्यथा – 'धर्मु करणिहार आछ' – धर्मं करिष्यन्नास्ते, स्त्री करिष्यन्ती, कुलं करिष्यत् । एवं 'पढणिहार आछ' – पठिष्यन्नास्ते, पठिष्यन्ती वा, पठिष्यद् वा । एवं 'जणिहार दीस' – गमिष्यन् दृश्यते, गमिष्यन्ती वा, गमिष्यद् वा । 'जेंवणिहार आछ' – जिम्विष्यन्नास्ते; भोक्ष्यमाणो[4] वा; स्त्री तु भोक्ष्यमाणा वा, कुलं भोक्ष्यमाणम् । एवमन्येऽपि ॥ छ ॥

**'व्यापारोक्तेः'** इति । **वश्चेद्** = वकारश्चेत् प्रयुक्तः, अपभ्रंशे दृश्यत इत्यर्थः । कृत्याः 'ते कृत्याः' इति कृत्यसंज्ञा ये तव्य-अनीय-क्यप्-ध्यण्-या इत्यर्थः । तद्यथा – 'वेद पढव' – वेदः पठितव्यः, पठनीयः । 'स्मृति अभ्यसवि' – स्मृतिरभ्यस्तव्या,[5] अभ्यसनीया । 'पुराण देखव' – पुराणं द्रष्टव्यम्, दर्शनीयम्, दृश्यं वा । 'धर्मु करव' – धर्मः कर्तव्यः, करणीयः, कार्यः, कृत्यो वा । एवमन्येऽपि ॥ छ ॥

ननु कर किएसि करिह इति करोतिनोक्तयो निबद्धाः । अतः [प० १७-१] अपरधातुक्तिषु तर्हि कः प्रयोगप्रकार इत्याशङ्क्याह –

**इत्युक्तयो मयोक्ताः करोतिना सर्वधातुविषयत्वात् ।**
**तस्मादमुनैव पथा[6] शेषार्था धातवश्चोह्याः ॥ १८ ॥**

करोतिर्हि सर्वधातुविषयः, अतः **'करोतिना'** दर्शिता उक्तयः सर्वधातुभिरपि ज्ञेयाः । करोत्यर्थस्य सर्वव्यापकत्वात् । तथैव च प्रत्येकमुदाहरणेषु दर्शितमेव । **'तस्माद्'** इति । दिङ्मात्रमेवैतद्दर्शितम् । अनेनैव च मार्गेण ये अवशिष्टप्रत्ययानां धातूनां चार्थास्तेऽप्यूह्याः – स्वबुद्ध्योद्भाव्य प्रयोज्या इत्यर्थः । तद्यथा – 'करण चाह' – कर्तुमिच्छति चिकीर्षति । 'करण इच्छत आछ' – कर्तुमिच्छन्नास्ते । 'धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्' इति सन् । 'सुठु हो(सु होउ?)' – सो भूयते । लुकि बोभूति । 'धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे ।'

---

1 भुभुजान था । 2 क्रितः । 3 क्रिता । 4 भोष्यमाणा । 5 °रभ्यस्ताव्या । 6 मथा ।

'पुत्र इच्छ' – पुत्रमिच्छति = पुत्रीयति, पुत्रकाम्यति। 'नाम्न आत्मेच्छायां यिन्'; 'काम्य च'। एवमन्येऽपि ॥ छ ॥

## ॥ इत्युक्तिव्यक्तिविवृतौ क्रियोक्ति[व्यक्ति]व्याख्या ॥

ॐ

अथ कारकोक्तिव्यक्तिर्व्याख्यायते। तत्र कारकाणां साधारणं लक्षणमाह–

**तस्य निमित्तं यत् पुनरुक्तौ तत् कारकं हि लिङ्गोक्तम्।**
**व्यापारभेद[1][प० १७-२]भिन्नं ज्ञात्वा तज्ज्ञैः प्रयोज्यं स्यात् ॥ १९ ॥**

तच्छब्दः पूर्वोक्तपरामर्शी। पूर्वं च '**व्यापारो धात्वर्थः**' (का० ८) इत्युक्तम्। अत-**स्तस्य** = व्यापारस्य **निमित्तं** = निष्पत्तौ कारणं यत्, **उक्तौ** = अपभ्रंशभाषिते। **तत् कारकं** ज्ञेयम्। **हि** यस्मात्। क्रियानिमित्तं कारकमुच्यते। तच्च **लिङ्गोक्तम्**। 'धातुविभक्तिवर्ज्जमर्थवल्लिङ्गम्'। तेनोक्तम्, वृक्षादिशब्दवाच्यमित्यर्थः। क्रियाकारकसमुदायो वाच्य(°क्यः?)म्। तत्र च क्रिया धातुप्रयोज्या। कारकं तु लिङ्गप्रयोज्यमिति भावः। ननु षट् कारकाणि। ततश्चानेककारके प्रयोगे कुत्र कतमत् प्रयोज्यमित्याह – **व्यापारभेदभिन्न**मिति। कारकाणि किल क्रियायां स्वस्वव्यापारेण व्याप्रियन्ते। ते च व्यापारास्तेषां भिन्नाः, तद्भेदाच्च कारकाणां भेदः। लोहकार-चर्म्मकारादीनामिव। ततश्च स्वस्वव्यापारेण चिह्नितं **ज्ञात्वा** कर्त्रादिकं परिच्छिद्य, **तज्ज्ञैः** = विदितकारकसङ्केतैः, **प्रयोज्यं स्यात्** = संस्कृतभाषया वाच्यं भवेत् ॥ छ ॥

अथ व्यापारभेदं कथयत्कर्तुस्तावदाह –

**यः कारकः स कर्त्ता प्रेर्यश्चेत् प्रेरकस्य हेतुत्वम्।**
**तत्रेनन्तो धातुः संबोध्यः संमुखीकरणे ॥ २० ॥**

लोकोक्तिप्रयुक्तानेक[प० १८-१]कारकमध्ये **यः कारकः** = क्रियां 'यः करोति स कर्ता'। बहुषु व्याप्रियमाणेषु यदुद्देशेन लोकैरयमेतत् करोति इति निर्द्दिश्यते स कर्त्तृवाच्य इत्यर्थः। यथा 'काठहू स्थालिं ओदन सुआर पच' – काष्ठैः स्थाल्यामोदनं सूपकारः पचति – इत्यत्र सूपकारः। 'खेतं हंसिएं व्रीहिं लविर्ति कमारें' – क्षेत्रे दात्रेण व्रीहयो लूयन्ते कर्मकरेण' इत्यत्र कर्मकरः। इत्यादि। '**प्रेर्यश्चेत्**' इति। स च कर्त्ता द्विविधः स्वतन्त्रः, परतन्त्रश्च। स्वतन्त्रो दर्शितः। यस्तु कर्त्ता[2] अन्येन प्रेर्यते स प्रेर्यो भवति। यदि च प्रेर्यः, तदा तस्य यः **प्रेरकस्तस्य हेतुत्वं** भवति। 'कारयति यः स हेतुश्च' इति वचनात्। यत्र च **हेतु**-कर्तुः प्रयोगस्तत्र वाच्ये **धातुरिनन्तः** प्रयुज्यते। 'धातोश्च हेतौ' इत्युक्त इन्-प्रत्ययोऽन्ते यस्य। यथा – 'दुहाव गाइ दूधु गुआलें गोसांवि' – दोहयति गां दुग्धं गोपालेन गोस्वामी। अत्र गोपालः प्रेर्यः। गोस्वामी हेतुकर्त्ता। 'पढाव छात्रहि शास्त्र ओझा' – पाठयति छात्रं

1 °भेदे। 2 कर्त्रा।

शास्त्रं उपाध्यायः । अत्र च छात्रः प्रेर्यः, उपाध्यायो हेतुकर्त्ता । एवमन्यत्रापि । **'संबोध्य'** इति । स च कर्त्ता संबोध्यः=संबोधनीयो भव [ प० १८-२ ] त्यामन्त्रणविषयो भवतीत्यर्थः । क ? **'संमुखीकरणे'** = असंमुखः संमुखः क्रियते संमुखीकरणम्, तत्र । असंमुखं कार्यान्तरासक्तं कंचिद् यदा कश्चित् संमुखं सावधानं कर्तुमिच्छति तदा तमामन्त्रयते यथा – 'हे गोपाल ! गां दुग्धं दुग्धि; हे छात्र ! शास्त्रं पठ' – इत्यादि । कर्त्तेति च लिङ्गार्थोपलक्षणम् । यदुक्तम् – 'सिद्धस्याभिमुख्यकरणमामन्त्रणम्' इति ॥ छ ॥

अथ कर्मादिलक्षणमाह –

**कर्म्म व्यापारफलम्, येनैतत् साध्यतेऽत्र तत् करणम् ।**
**यस्मात् तदपादानम्, यस्मै तत् संप्रदानं च ॥ २१ ॥**

**व्यापारस्य यत् फलम्** – यदुद्देशेन प्रेक्षावान् क्रियामारभते तत् कर्म । यथौदनं पचति सूपकार इत्यत्रौदनमिति । घटं करोति कुलाल इत्यत्र घटमिति । **'येनैतत् साध्यत'** इति । एतत् कर्म येनोपादानेन कृत्वा साध्यते – कर्त्रा साधकतमत्वेन यद् विवक्ष्यते तत् करणम् । यथेन्धनेन पचति सूपकार इत्यत्रेन्धनेनेति । दात्रेण लुनाति कृषाण इत्यत्र दात्रेणेति । **'यस्मात् तदपादानम्'** इति । यतः पृथग् भवति, यतो बिभेति वा यतो गृह्णाति वा तदपादानम् । विश्लेषेऽवधिरपादानमित्यर्थः । यथा [ प० १९-१ ] 'गांव हुंत आव' – ग्रामादागच्छति । 'वाघतौ डरा' – व्याघ्राद् दरति । 'ओझा पास वीदा ले' – उपाध्यायादधीते । एवमन्यत्रापि । **'यस्मै तत् संप्रदानं च'** इति । यस्मै दातुमिच्छा भवति, यस्मै प्रीणनं करोति, यस्मै किमपि धारयते तत् संप्रदानम् । यदर्थं क्रियाफलं तदित्यर्थः । यथा – 'बाम्हण गावि दे' – ब्राह्मणाय गां ददाति । 'ब्राह्मणहि लाडु प्रीति जण' – ब्राह्मणाय रोचते मोदकः । 'वणिएं कर धणु धर' – वणिजे धनं धारयते । एवमन्यत्रापि ॥ छ ॥

अथाधिकरणस्य लक्षणं कारकाणां लोकोक्तीश्चाह –

**अधिकरणं त्वाधारोऽथैषामुक्तिः पृथग् यथा लोके ।**
**जातौ, जेथु किंह, जाहां, जेइं करि, जो किछु कीज, जेइं केहुं ॥**

कर्तृ-कर्मगता क्रिया यदाश्रिता स **आधारः**, तदेवाधिकरणमिति । यथा – 'सिंहासण आछ राजा' – सिंहासने तिष्ठति राजा । स्थाल्यां पच्यत ओदन इति । एवमन्यत्रापि । **'अथैषाम्'** इति । अथेदानीम्, **एषां** कारकाणा**मुक्तिर**पभ्रंशे प्रयोगः । **लोक**व्यवहारे प्रत्येकं **यथा** । **'जातौ'** इति । यतः-तौ इति शब्दस्तदपा[दा]नं लोके । यथा – 'तुम्हतौ [ प० १९-२ ] अम्हे' – युष्मत्तो वयम् । 'अम्हतौ तुम्हे' – अस्मत्तो यूयम् । 'तातौ अम्हे ईहां आछ' – ततो वयमिहास्महे । 'अम्हतौ सौ वाढा' – अस्मत्तः स ववृधे । तथा – 'ताहांहुंत आ' – तत आगतः । 'ईहांहुंत गा' – इतो गतः – इत्यादि । **'जेथु किंह'** इति । **'जेथु किंह, जा किंह,**

जाहे किंह' – इत्याद्युक्तिः संप्रदानस्य, यस्मै कृते इत्यर्थे। तथा 'का किंह, क करें' [कस्य?] अर्थे। 'कवणे काजें गा' इत्युक्तौ कस्मै गत इत्यादि संप्रदानम् । 'जाहां' इति । 'जाहां बैस ताहां दीस' – यत्रोपविशति तत्र दृश्यते । 'जाहां आछ, ताहां वांछ' – यत्रास्ते तत्र वाञ्छति । एवमधिकरणोक्तिः । 'जेइं करि' इति । येन कृत्वेति[1] । 'इंधणे रांध, हंसिएं लव' – इन्धनेन राध्यति, दात्रेण लुनाति – इति करणोक्तिः। 'जो किछु कीज' इति । यत् किञ्चित् क्रियते । 5 यदर्था क्रिया इत्यर्थः । यथा 'भातु रान्धा' – भक्तं राध्यते । 'पोलि पाच' – पोलिका पच्यते । एवं कर्मोक्तिः । 'जेंइं केहुं' इति । येन केनापि क्रियते, यः कश्चित् क्रियायां प्रेक्षापूर्वकारी प्रवर्त्तते, एतैः सहेत्यर्थः । एतेन कुतोऽपि, कस्मैचिदपि, कस्मिन्नपि, केनापि, किमपि, कश्चिदपि करोतीति कारकाणां व्यापारभेदो लोकोक्त्या [प० २०-१] प्रतिपादितो भवति । तद् यथा – 'भूषहितौ ब्राह्मणु किंह थालिं करि'; एवं 'इंधणे भातु रान्ध ब्राह्मणु' – 10 बुभुक्षात आत्मने स्थाल्यामिन्धनेन भक्तं राध्यति ब्राह्मणः । एवमन्येऽपि ॥ छ ॥

अथ लिङ्ग-संख्यादीनां कारकधर्माणां संबन्ध-विशेषणयोश्चोक्तिव्यक्तिं कुर्वन्नार्याद्वयमाह –

**पुं-स्त्री-नपुंसकत्वं शब्दानां लोकतः परिच्छेद्यम् ।**
**एकत्व-द्वित्व-बहुताः संख्यास्त्विह संख्यया ज्ञेयाः ॥ २३ ॥** 15
**स त्वमहं[2] वा पुरुषा उक्तानुक्तत्वमुक्तितो व्यक्तम् ।**
**संबन्धः स्वीकाराद् विशेषणं तु व्यवच्छेदात् ॥ २४ ॥**

'पुं-स्त्री' इति । अपभ्रंशे ये शब्दाः प्रयुज्यन्ते तेषां पुं-स्त्री-नपुंसकत्वम्, लोकतो = लोकोक्तितः, परिच्छेद्यं = निश्चेतव्यम् । यथा 'मणुसु जेंम' – मानुषो जिम्वति, भुङ्क्ते वा । 'मेहलि सोअ' – महेला[3] स्वपिति । 'नपुंसक जाम' – नपुंसकं जायते । 'एक पुरुष' – एकः पुरुषः । 20 'दुइ जोईं' – द्वे जु(यु)वत्यौ । 'बहुतु वृन्द' – बहूनि वृन्दानि । अथवा लोकतस्तज्ज्ञलोकेभ्यः, लिङ्गस्य लोकाश्रयत्वात् । यस्य शब्दस्योक्तितो लिङ्गनिश्चयो न भवति तस्य, तज्ज्ञं लोकं पृष्ट्वा कार्य इत्यर्थः । उक्तिमात्रादेव तस्यासिद्धेः । तद्यथा – 'जालें [प० २०-२] डाह' – ज्वालेन ज्वालया वा दह्यते । 'विमाण आव' – विमानं विमानो वा आगच्छति । 'सरदं ऋतुं तड सु सोह नदीकर' – शरदि ऋतौ नद्यास्तटः तटं वा तटी वा सुष्ठु शोभते । एवमन्येऽपि ॥ छ ॥ 25

'संख्यास्त्विह' इति[4] । इहापभ्रंशे संख्या[5] एकादिकाः । संख्ययैवोत्कीर्तितया ज्ञेया[:], न पुनरुपायान्तरेणेत्यर्थः । द्वित्व-बहुत्वयोस्तुल्योक्तिकत्वात् । तद्यथा – 'एक जा' – एको याति, एका वा याति, एकं वा । 'दुइ अच्छति' द्वौ तिष्ठतः, द्वे वा तिष्ठतः, द्वे वा । 'बहुतु पूत भए' – बहवः पुत्रा बभूवुः । 'दुई बेटीं भई' – द्वे बेट्टिके बभूवतुः । 'एक गदिआण पावेसि' –

---

1 क्रिलेति । 2 सतलमहं । 3 मेहला । 4 संख्यालिह° । 5 संक्षा ।

एकं गह्दिकानाणकं प्राप्तवान् । 'दुइ गदिआणे, बहुतु गदिआणे'—द्वे बहूनीति । एव-मन्यत्रापि ॥ छ ॥

**'स त्वमहं वा पुरुषाः'** । पुरुषपरिच्छेद उक्तेरेव स्पष्ट इत्यर्थः । तद्यथा—'सो कर' इत्युक्तिर्लिङ्गत्रयेऽपि तुल्यैव । एवं द्वित्वादिष्वपि । तेन स करोति, सा करोति, तत् करोति । 5 'ते दुइ करति'—तौ द्वौ, ते वा, ते वा कुरुतः । 'ते बहुतु करति'—ते बहवः, ता बह्वयः तानि बहूनि । एवं 'तुं करसि'—त्वं करोषि; 'तुम्हे दुइ करहु'— युवां कुरुथः; 'तुम्हे बहुतु करहु'—यूयं बहवः [ प० २१-१ ] कुरुथ । पुरुषाः, स्त्रियः, कुलानि वा । एवं, 'हौं करऔं (उं ?)'—अहं करोमि । 'अम्हे दुइ करहु'—आवां कुर्व्वः । 'अम्हे बहुतु करहु'—वयं बह्वः कुर्म्मः । लिङ्गत्रयेऽपि तुल्यमतस्तत्परिच्छेदस्तद्विशेषोक्तेरेवेति ॥ छ ॥

10 **'उक्तानुक्तत्वम्'** इति । द्वितीयादिविभक्तिप्रतिपाद्यं यत् कारकं तदनुक्तम् । कारकवि-हितत्यादिप्रत्ययादिप्रतिपाद्यं क्रियासंबद्धलिङ्गार्थप्रतिपाद्यं चोक्तम् । ते च द्वे अपि तु **उक्तित एव**—अपभ्रंशभाषितादेव **व्यक्ते**=स्पष्टे प्रतीयेते । तद्यथा—'छात्रु गाउं या'—छात्रो ग्रामं गच्छति । अत्र हि कर्म्मत्वं द्वितीयया व्यज्यते, अतो अनुक्तम् । उक्तं कर्तृत्वं ति-प्रत्ययेन गमनसंबद्धेन लिङ्गार्थेन वा, अत उक्तम् । 'छात्रें गाउं जाइआ'—छात्रेण ग्रामो गम्यते । अत्र 15 तु कर्तृत्वं तृतीयया प्रतिपाद्यते, अतोऽनुक्तम् । कर्मत्वं तु ते-प्रत्ययेन गतिसंबन्धेन लिङ्गा-र्थेन च, इत्यत उक्तम् । छात्रेण गम्यते, छात्रेण भूयत इत्यादि तु भावोक्तिः । अत्र च कर्तैवानुक्त इति । एवमन्यत्रापि ॥ छ ॥

**'संबन्धः स्वीकारात्'** । स्वमात्मीयमुच्यते । अ-स्वं स्वं क्रियते-स्वीकारः । लोकोक्तौ स्वीकारात् संबन्धो व्यज्यते । यथा—'राजाकर पुरुषु'—राज्ञः पुरुषः । तेहूं दूकर [ प० २१-२ ] 20 गाउं'—तयोर्द्वयोर्ग्रामः । 'अम्हार वनु'—अस्माकं वनमित्यादि ॥ छ ॥

**'विशेषणं तु व्यवच्छेदात्'** इति । इतरसत्तानिवृत्तिहेतुर्विशेषणमुच्यते । तत्र लोकोक्तौ कुतोऽवगन्तव्यमित्याह—**'व्यवच्छेदात्'** । तद्यथा—'सुकिलि गाइ लउडें हाकु'—गामभ्याज शुक्लां दण्डेन । रक्तादीनां व्यवच्छेदः । 'बम्हण इं पर निवंतेसु'—ब्राह्मणानेव परं निमन्त्रयिष्यसि । क्षत्रियादिपरिच्छेदः । 'पढेसु पर'—पठिष्यसि परम् । [1]क्रियान्तरव्यव-25 च्छेदः । 'सोनें इं पर दे'—सुवर्णमेव परं ददाति । द्रव्यान्तरव्यवच्छेदः । परमार्थतस्तु सर्वाण्येव वाच्यानि व्यवच्छेदफलानि । केवलं विवक्षापेक्षा तत्प्रतीतिरतो न प्रकथ्यते । अर्थात् सिद्धार्था—इति ।

## ॥ इत्युक्तिव्यक्तिविवृतौ कारकोक्तिव्यक्तिव्याख्या ॥



---

1 क्र्यांतर° ।

अथोक्तिभेदव्यक्तिर्विधीयते । तत्रादावुक्तिभेदबीजमार्ययाऽऽह –

**उक्तेश्च दश पदार्था उत्पत्तौ मूलमत्र शेषास्तु ।**
**तत्पल्लवास्तदाश्रयकृतभेदास्ते च कालाद्याः ॥ २५ ॥** [प० २२-१]

**उक्तेश्चोत्पत्तौ** – जन्मनि **मूलं** प्रधानं कारणं **दशैव पदार्थाः** । **अत्र** = लोकानां वाग्व्यवहारे । शब्दार्थो हि शब्देन प्रयुक्तेन प्रतिपाद्यते । स च दशप्रकार एव । लिङ्गार्थादिर्वक्ष्यमाणः । ये तु तदितरे, तेषामेव मूलभूतानां पदार्थानां **पल्लवाः** । **तदाश्रयकृतभेदाः** – ते च ते आश्रयाश्च । आश्रयो विषय उच्यते । कृतो[1] भेदो यैस्ते तथा । तदाश्रयेषु कृतभेदास्तदाश्रयकृतभेदाः । अथवा, त एव दश पदार्था आश्रयो विषयो येषाम्, तथा कृतो भेदो यैः । ततस्तदाश्रयाश्च ते कृतभेदाश्च तदाश्रयकृतभेदाः । तेषु दशसु पदार्थेषु ते आश्रिताः, तेषामेव पदार्थानामुत्पादितोक्तिभेदाः । उक्तिभेदहेतवस्ते धर्माः । न पुनः पृथक् प्रयोज्यमर्थान्तरमेकादशं किञ्चिदित्यर्थः । अतो दशैव पदार्था इति, नतु तदितरे । तर्हि के ते इत्याह – **ते च कालाद्याः** – इति । कालो लिङ्गं संख्या पुरुषा इत्यादयः ॥ छ ॥

अथ तानेव पदार्थानाह – [प० २२-२]

**लिङ्गं क्रिया ततोऽपि च कारकषट्कं ततश्च संबन्धः ।**
**आमन्त्रणं च दशमं किन्त्वेतत् केवलं नोक्तौ ॥ २६ ॥**

प्रथमं तावल्लिङ्गम् – अव्यतिरिक्तो लिङ्गार्थः । द्वितीया **क्रिया** – धात्वर्थः । **ततः** कर्तृ-कर्म-करण-संप्रदान-अपादान-अधिकरणानि षट् । **ततश्च संबन्धः** । एवं नव । **दशमं च आमन्त्रणम्** । एते च लिङ्गार्थादयो नव पदार्थाः, केवला अपि विवक्षाविषया भवन्ति, प्रयुज्यन्ते च । आमन्त्रणं तु लिङ्गार्थसंबद्धमेव परं प्रयोगं याति, न केवलम्; तस्य तदेकविषयत्वात् । आमन्त्रितो हि 'किं भणसि?' इत्यपेक्षते । तदुत्तरेण च वाक्यं समाप्यते, अतो नास्य केवलस्योक्तिः । अत उक्तम् – **किन्त्वेतत् केवलं नोक्तौ** – इति । अतो नवानामेव भेदा दर्शनीया इति भावः ॥ छ ॥

अथोक्तिभेदोत्पत्तिक्रमं तत्संख्यां चाह –

**एषां चैकद्व्यादिक्रमेण लोकैर्विवक्षितानां स्युः ।**
**पञ्चशतान्युक्तीनामेकादशसंयुतान्येव ॥ २७ ॥**

**एषां च** लिङ्गार्थादीनां पदार्थानां नवानां संबन्धपर्यन्तानां **पञ्चशतान्युक्तीनां** भवन्ति । कीदृशानि? – **एकादशसंयुतान्येव** – नैकयाप्युक्त्या हीनानि नाप्यधिकानीत्येवार्थः । कथंभूता[प० २३-१]नाम्? – **एकद्व्यादिक्रमेण लोकैर्विवक्षितानाम्** । तद्यथा – एकैकविवक्षायां नवैवोक्तयः, द्वयोर्द्वयोः षट्त्रिंशत्, त्रयाणां त्रयाणां विवक्षायां चतुरशीतिः । चतुर्णां चतुर्णां

षड्विंशत्यधिकं शतम् । एवं पञ्चानां पञ्चानामपि षड्विंशत्यधिकं शतम् । षण्णां षण्णां चतुरशीतिः । सप्तानां सप्तानां षट्त्रिंशत् । अष्टानां अष्टानां नव । नवानामपि विवक्षाया-मेकम् । एवं पञ्चशतान्येकादशाधिकान्युक्तीनां भवति । कथमियं संख्योत्पद्यत इति चेत्, उच्यते—नवकाद्येकान्तानेकाद्युत्तरच्छेदानङ्कानालिखेत् । ते च यथा—

| ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |

ततः पूर्वेण परं हत्वा स्वच्छेदेन भजेत् । लब्धं छेदे संख्यानां पदार्थानामुक्तिभेदसंख्या भवति । तद्यथा—नवानामध एकच्छेदः । ततश्चैकैकस्य लिङ्गार्थादिपदार्थस्य विवक्षायां नवै-वोक्तयः, ९; ततो नवभिरष्टकं हत्वा द्वाभ्यां विभजेल्लब्धं षट्त्रिंशत्, ३६; द्वयोर्द्वयो-र्विवक्षायामुक्तिभेदाः । ततो षट्त्रिंशता सप्तकं हत्वा त्रिभिर्विवक्ष्य लब्धं चतुरशीतिः, ८४; त्रयाणां त्रयाणां विवक्षायामुक्तिभेदाः । एवमेव चतुर्णां षड्विंशं शतं, १२६; [प० २३-२]

पञ्चकादीनामपि विलोमेनैता एव संख्या । यथा पञ्चानां १२६; षण्णां ८४; सप्तानां ३६; अष्टानां ९; नवानामेकं १; सर्वेषां भेदसंख्या ५११ । अत्रार्थे सूत्रम्—

**नवकाद्येकप्रान्तानङ्कानालिख्य ताडयेत् क्रमशः ।**
**पूर्वेण परं विभजेदेकाद्येकोत्तरैरङ्कैः ॥**
**छेदकसंख्यार्थानामुक्तिभिदस्ता भवन्ति सर्वेषाम् ।**
**एकद्व्याद्युक्तीनां भेदमितिः सा भवेदेवम् ॥** इति ।

उदाहरणं वक्ष्यते ॥ छ ॥

अथ 'शेषास्तु तत्पल्लवाः' ( का० २५ ) इत्युक्तमतस्तानाह—

**कालत्रयमथ च क्त्वा-तुम्-शन्तृङभीक्ष्णतादयो लिङ्गम् ।**
**संख्या पुरुषा उक्तानुक्तत्वे भेदहेतवस्तेषाम् ॥ २८ ॥**

पूर्वं ये दश पदार्थाः कथितास्तेषु मध्ये क्रियायास्तावदभेदहे[त]वः के ?, ते कालत्रयं तावत् वर्त्तमानातीतानागतसंज्ञः(°ज्ञम् ?) । एकैव क्रिया स्वपरिच्छिन्नकालत्रयसंबन्धात् त्रिधा भवति । तत्स्वरूपत्वाच्च तस्यास्तद्धर्मत्वमुक्तम् । यस्य हि यत्स्वरूपं स तस्य धर्म उच्यते । यथाग्नेरुष्णता । क्त्वा-तुमादयः प्रत्ययार्थाश्च क्रियोक्तिभेदहेतवः । कारकोक्ति-भेदहेतवश्च । यथा—लिङ्गं तावत् पुं-स्त्री-नपुंसकाख्यम्, संख्या पुरुषा उक्तानुक्तत्वे [प० २४-१] च, एत एव च संबन्धस्यामन्त्रितस्य च । अत एते पल्लवा इव । यथा वृक्षस्य मूलं भवति, तदुद्भूताश्च पल्लवा वृक्षं विस्तारयन्त्येवं धात्वर्थ-लिङ्गार्थादयो मूलभूता दश पदार्थाः, तद्विस्तारकृतश्चैते धर्मा इत्यर्थः ।

नन्वेतैः कालादिभिः पल्लवैर्यावन्तो भेदा भवन्ति तत्संख्याऽपि किमिति न दर्शिता इत्याह –

**एतद्भेदवशात् पुनरुक्तीनां या भिदो न ताः कथिताः ।**
**यस्माद्धर्म्मिणि विदिते तद्गतधर्म्माः स्वसंवेद्याः ॥ २९ ॥**

यदा हि पटो जातस्तदा तद्गता ये शुक्लत्वैकत्वसूक्ष्मत्वादयो धर्म्मास्ते तत्संबन्धत्वाद् विदिता एवार्थात् । यतः संकेतादर्थाधिगतिर्धर्मविशिष्टश्च । धर्मी संकेतविषय इति भावः । यस्माद् – इति । **धर्मिणि** धात्वर्थलिङ्गार्थादिके **विदिते** सति **तद्गता** ये **धर्म्मा** अवयवप्रायास्ते **स्वसंवेद्या** एव – स्वयमेवात्मानं वेदयन्ति । न हि गवि ज्ञाते खुर-ककुदादयः शाबलेय-धावलेयत्वादयो वा धर्म्मास्तद्गता अविज्ञाता भवन्ति । धर्म्मिणो धर्माश्रयत्वात् । यस्य वस्तुनो यत्स्वरूपं स तस्य धर्म्म उच्यते यतः । तस्मात् धर्म्मनिबन्धना ये धर्म्मिणां भेदास्तेषां विशेषकथनमनुप [पृ० २४-२] युक्तमेवेति । तस्मान्नवानामेवोक्तिभेदा दर्श्यन्त इति भावः ।

अथोदाहरणानि । तत्र च लिङ्गार्थादीनां नवानामप्येकैकस्य, ततो द्वयोर्द्वयोः; इत्यादिक्रमेण ये भेदास्तेऽत्रोक्तिप्रत्युक्तिभ्यां विभक्ता लिखनीयाः । लोकव्यवहारस्य तदात्मकत्वात् । उक्तिर्हि प्रश्न उच्यते तदुत्तरं च प्रत्युक्तिः । प्रश्नोत्तरस्वरूपश्च लोके शब्दव्यवहारः प्रायः । यश्च प्रश्नविषयः स 'किं' शब्देन लोकैः प्रयुज्यते । अतो यत्रोक्तौ लिङ्गार्थादिषु यावन्तः 'किं' शब्दविषयाः, सा तावतामुक्तिरुच्यते । एकस्मिन् पृष्टे सत्येकस्योक्तिः, द्वयोः पृष्टयोर्द्वयोरुक्तिः, त्रिषु त्रयाणामित्यादि यावन्नवसु पृष्टेषु नवानामिति । तत्र लिङ्ग-संख्या-पुरुषैः पल्लवैर्विभक्तस्य केवललिङ्गार्थस्य विवक्षायामुक्ति-प्रत्युक्त्योर्यथा – परिचितेन सहागतमपरिचितं दृष्ट्वा कश्चित् कंचित् पृच्छति – 'को ए' – कोऽयम् । परिचितस्योत्तरम् [पृ० २५-१] – 'मोर विसिठु' – मम विशिष्टः । अत्र हि प्रश्नोत्तरयोरव्यतिरिक्तो लिङ्गार्थो विषयः, अत इयं लिङ्गार्थोक्तिरुच्यते । एवं वक्ष्यमाणोदाहरणेष्वपि ज्ञेयम् । 'को ए' – कावेतौ ?, राजपुरुषौ । 'को ए' – क एते ?, राजद्विजाः । स्त्रीविषये तु प्रश्ने यथा – 'को ए' – केयम् ?, ब्राह्मणी । 'को ए दू' – के एते द्वे ?, मासोपवासिन्यौ । 'को ए जोई' – का एता युवत्यः ?, प्रोषितभर्तृकास्त्वत्सेवकसिष्टा(शिष्या° ?)नां वध्वः । नपुंसकविषये यथा – 'काह ए' – किमिदम् ?, द्वीपान्तरफलम् । 'काह ए दुइ वस्तु' – के एते द्वे वस्तुनी ?, लवण-हिङ्गुनी । 'काह ए सब' – कान्येतानि सर्वाणि ?, त्वद्भार्याभरणानि । सामान्योक्तौ तु प्रश्ने – 'काह ए' – किमिदम् ?, वृक्षः, कुण्डम्, कुमारीत्याद्युत्तरं भवत्येव ।

निर्धारितप्रश्ने तूक्तिर्यथा । 'तेन्ह मांझ कवण ए' – तयोस्तेषां वा मध्ये कतमोऽयम् ?, सर्वज्येष्ठः । अथवा कतमावेतौ ?, ज्येष्ठ-कनिष्ठौ । [पृ० २५-२] कतमे एते ?, ज्येष्ठभार्यापुत्राः । कतमेयम् ?, कनिष्ठा वधूः । कतमे एते ?, ज्येष्ठपुत्रवध्वौ । कतमा एताः ?, राज्ञो विलासिन्यः । 'अरे जाणसि एंन्ह मांझ कवण तोर भाइ' – अहो जानास्येषां मध्ये कस्तव भ्राता ?, उत्तरम् – त्वम् । पार्श्वस्थः पृच्छति – 'लहुडा कवण' – कनिष्ठः कतमः ?, उत्तरम् – 'हौं' –

अहम् । एवमन्या अपि लिङ्ग-संख्या-पुरुषविशिष्टस्य लिङ्गार्थस्योक्तय ऊह्याः । एवं केवल-लिङ्गार्थोक्तिः ।

अथ क्रियाया मात्रविवक्षायामुक्तयो यथा – 'अहो काह ईहां कीजए' – भोः किमेतदिह क्रियते; अथवा 'व्यापरिअ' – व्याप्रियते ?, उत्तरम् – 'पढिअ' – पठ्यते; अथवा 'पैअ' –
५ पच्यते; अथवा 'खेलिअ' – खेल्यते; क्रीड्यते वा । 'काह इंहां तूं करसि' – किमत्र त्वं करोषि ?, 'पअउं' – पचामि । 'काह इंहां करहु' – किमत्र कुरुथः ? [ ] पठावः । किमत्र कुरुथ [ ] पठामः । 'काह कीजत आच्छ' – किं क्रियमाणमास्ते ?, पच्यमानम् । 'काह करत आच्छिअ' – किं कुर्व्वता स्थीयते, आस्यते वा, पचता । एवमादि वर्त्तमाने ॥ छ ॥ [ प० २६-१ ]

१० अथातीते – 'अरे एति वार तैं काह किअ तांहा' – अहो एतावतीं वेलां किमकारि तत्रैव ?, 'पढा' – अपाठि, पठितं वा; [ पआ ? ] अपाचि, पक्वं वा । 'काह करत आच्छे' – किं कुर्वता स्थितम् ?, 'पढत' – पठता । 'पयन्त' – पचता ।

अथैष्यति – 'काह करिहसि' – किं करिष्यसि ?, 'पढिहउं' – पठिष्यामि । 'ओलगिह-उं' – अवलगिष्यामि । 'काह करणिहार आच्छसि' – किं करिष्यंस्तिष्ठसि, किं कर्तुकामो वा ?,
१५ 'पढणिहार' – पठिष्यन्, पठितुकामो वा । 'काह करत आछीहसि' – किं कुर्व्वन् स्थास्यसि ?, 'पढत' – पठन् । 'काह करणे(णि ?)हारें आछिअ' – किं करिष्यमाणेनास्यते ?, 'पढणि-हारे' – पठिष्यमाणेन । 'काह करव' – किं करिष्यते ?, 'पढव' – पठिष्यते, वक्ष्यते वा । एवमितरधातवोऽपि यथेष्टं प्रयोज्याः । 'काह करि, काह करत आच्छसि ?, रांधि जेमत आच्छउं' – किं कृत्वा कुर्व्वन्नसि ?, राद्धूवा पक्त्वा वा जिवन्नसि, भुञ्जानो वा । 'काह करि
२० काह कीज हो ?, पइ जेंविअ' – किं कृत्वा, किं क्रियते ?, पक्त्वा जिंव्यते, भुज्यते वा । 'काह इंहां कीज ?, पै पै षाज' – किमत्र [ प० २६-२ ] क्रियते । पक्त्वा पक्त्वा खाद्यते; पाचं पाचं वा खाद्यते । 'काह ईहा कर ?, जेंवि जेंवि जा' – किमत्र करोति ?, जिम्वित्वा जिम्वित्वा याति; अथवा भोजं भोजं व्रजति । 'काह करण, किंह, काह करत आच्छसि, आछिअ वा, काह कीज वा' – किं कर्तुं, किं कुर्वंस्तिष्ठति, कुर्वता स्थीयते वा, किं क्रियते वा । 'जेंउंवे
२५ किंहं राधत आच्छउं, आच्छिअ राझ' – जिंवितुं राध्यता स्थीयते, भोक्तुं पचता वा, भोक्तुं पच्यते वा । 'काह करत, काह करसि' – किं कुर्वन्, किं करोषि ?, 'पढत रांधउं' – पठन् राध्नोमि, पचामि वा । 'काह करत, काह कीज ?, पअंत पढिअ' – किं कुर्वता, किं क्रियते ?, पचता पठ्यते । एवं युगपत्क्रियमाणयोः क्रिययोर्गौणमुख्यभावे । तं विना तु, किं किं क्रियते – 'काह काह कीज ?, पइअ, पढिअ' – पच्यते पठ्यते । एतच्च
३० दिङ्मात्रम् । एवमन्येऽपि क्रियामात्रविवक्षायां सपल्लवा उक्तय ऊह्याः । एवं केवलक्रियोक्तिः ।

अथ केवलकर्तृविवक्षायामुदाह्रियते । स च कर्ता द्विविध उदाहार्यः, उक्तश्चानुक्तश्च ।

तत्र चोक्तस्य कर्तुर्लिङ्गा[ प० २७-१ ]र्थादयं विशेषो यदयमुक्तकर्तृशक्तिकः क्रियासंबन्धः प्रयुज्यते । लिङ्गार्थस्तु स्वरूपेणैव । 'को ए सोअ'—क एष स्वपिति शेते वा । 'को ए सोअन्त आच्छ'—क एष स्वपन्नास्ते, शयानो वा ?, उत्तरम् 'पहारी'—प्रहर[क]दाता । 'केइं ए सोविअ'—केनैतत् सुप्यते, शय्यते वा ?, 'पहारी'—प्रहरकदात्रा । 'को ए रांध'—क एष राध्यति, 'को ए रांधत आच्छ'—क एष राध्यन्नास्ते, पचन् वा ?, सूपकारः । कैषा ५ राध्यति ?, सूपकारी । किमेतत् पचति ? व्यञ्जनम् । सूपकारकुलम् । 'केइं ताहां जेंउंव'—कस्तत्र बुभुजे, अजिंवद् वा ?, ध्मा(?) ब्राह्मणः । 'को ताहां जेंवत आछ'—कस्तत्र भुञ्जान आसीत् ?, द्विजः । 'इंहां को पढिह'—अत्र कः पठिष्यति ?, द्विजात्मजः । 'इंहा को पढणिहार आछ'—अत्र कः पठिष्यन्नास्ते ?, छात्रः । 'अम्हपास केइं पढव'—अस्मत्तः केन पठितव्यम्, अस्माकं पार्श्वे वा ?, द्विजसुतेन । एवं द्वित्व-बहुत्वयोरपि । गुरुं शिष्यः पृच्छति—'राउलें १० पाह्व रांध को आच्छिह'—राजकुलचरणानां संनिधौ कः स्थास्यति ?, गुरोरुत्तरम् 'तूं'—त्वम् । 'मोर क्षेम को करिह'—मम क्षेमं कः करिष्यति ?, [ प० २७-२ ] उत्तरम् 'हौं'—अहम् । एवमन्या अपि पल्लवस्य कर्तुरुक्तय ऊह्याः । एवं केवलकर्तुरुक्तिः ।

अथ हेतुकर्तुर्विवक्षायामुदाह्रियते । 'कवण ए छाती तडें (?) राकर सागर ओंडहूपास खणावन्त आच्छ'—क एष धृतच्छत्रो राजसागरमुद्रैः खानयति, खानयन्नास्ते ?, सूरपालो १५ नाम राजपुरुषः । 'केंइं ए देउलु कराविअ'—केनैतद् देवकुलं कार्यते ?, 'करांवित आच्छ'—कार्यमाणमास्ते ?, धनपालेन । 'केई ए ईहां बाम्हण थापे'—क इहैतान् ब्राह्मणान् स्थापयामास ?, गोविन्दचन्द्रदेवः ॥ छ ॥ 'हो इह कोउ जो कनमेरुतूलु प्रासादु कराविह'—भविष्यति कोऽपि यः कर्णमेरुतुल्यं प्रासादं कारयिष्यति ?, 'राजा जइ कोउ'—राजा यदि कश्चित् । सुपुत्रः पृच्छति—'अहो पितरहो को तुम्ह तारिह'—अहो पितरः को युष्मांस्ता- २० रयिष्यति ?, उत्तरम् 'तुहिं'—त्वमेव । पुनः पृच्छति—'मोंहिं तहिं के वढाविहंति'—मम तर्हि के संवर्द्धयितारः ?, उत्तरम् 'अम्हेइ'—वयमेव । एवमन्या अपि हेतुकर्तुरुक्तय ऊह्याः । एवं हेतुकर्तुरुक्तिः ।

अथ केवलकर्म्मविवक्षायामु [ प० २८-१ ] दाह्रियते । तच्च कर्म्म द्विविधमुक्तमनुक्तं च । तत्रोक्तस्य कर्म्मणो लिङ्गार्थादयं विशेषो यदुक्तकर्मशक्तिकः क्रियासंबन्धः प्रयुज्यते, २५ लिङ्गार्थस्त्वव्यतिरिक्तः स एव । तद्यथा—'अहो काह ए सुआरे वेंटलि किएं रांध'—भोः किमसौ सूपकारः कृतसि( शि )रोवेष्टनो राध्यति ?, 'भातु'—भक्तम्, ओदनं वा । 'काह पअन्त आछ'—किं पचन्नास्ते ?, 'पुप'—अपूपान् । 'ए जोइ काह इंहां रांध'—इयं युवती(तिः) किमत्र राध्यति ? व्यञ्जनम् । 'ए कहार काह संपाडति'—एतौ काहारौ किमत्र संपादयतः, एते काहारा वा किमत्र संपादयन्ति ?, 'इंधणपाणि'—इन्धनोदकम् । 'काह ३० जेंवित आच्छ'—किं भुज्यमानमास्ते ?; 'काह जेंविअ'—किं भुज्यते ?; 'धिंए सांकरे सेंउं

सातु'—सघृतस(श)र्कराः सक्तवः । कृस(श)रा वा, पायसं वा । 'बेटा काहां गा'—बेटकः किं जगाम, गतवान् वा । कन्या तु गतवती । 'ओंझाउलु'—उपाध्यायगृहम् । 'पडवसीकर घरु'—प्रतिवेशिनो गृहम् । भृत्यः स्वामिनं पृच्छति—'पहरें को ईहां धरिहंति राउलु'—प्रहरके कि(क?)मत्र नियोक्ष्यन्ति चरणाः ?, 'तोहि'—त्वामेव । 'राउलं को धरव'—चरणैः को धर्तव्यः ?, 'तुहीं'—त्वमेव । [प० २८-२] 'विआलि को हउं मागिहउं'—विकालिकां कमहं याचिष्ये ?, 'अम्हे'—आ(अ)स्मानेव । 'को मै भोजन मागव'—को मया भोजनं याचितव्यः ?, 'अम्हेइ'—वयमेव । एवमन्या अपि सपल्लवस्य कर्मण उक्तय ऊह्याः । इति कर्मोक्तिः ॥ छ ॥

अथ करणविवक्षायामुक्तय उदाह्रियन्ते—'देउ काहें धाए'—देवं केन ध्यायति ?, 'मने'—मनसा । 'नइ काहें पव(त?)रिसि'—नदीं केन प्रतीर्णवान् ?, 'बाहन्हे(हु ?)'—बाहुभ्याम् । 'छांटेहें काहें विद्या अवड'—सत्वरं कया विद्या आपद्यते ?, 'प्रज्ञै'—प्रज्ञया । अथवा वृत्तैरुदाह्रियते । तद्यथा—

**दुर्जयो जायते वीरः केन संग्रामसंकटे ?**—खड्गेन ।
**सन्तरन्ति नदीं धीरा[ः] काभ्यां साहसशालिनः ?**—बाहुभ्याम् ।
**जगत् क्षीरार्णवे मग्नमिव कैर्जायते निशि ?**—शरच्चन्द्रकरैः । एवं पुंसि ॥
**निकृत्तचरणस्तूर्णं पथि याति कयैकया ?**—काष्ठघोटिकया ।
**ग्रीष्मसंतप्तभूपृष्ठे काभ्यां संचर्यते जनैः ?**—उपानद्भ्याम् ।
**पर्जन्यः कुरुते विश्वं काले काभि[ः] पुनर्नवम् ?**—वृष्टिभिः । एवं स्त्रियाम् ॥
**कुलालैर्नीयते केन मृत्पिण्डोऽपि च पात्रताम् ?**—चक्रेण ।
**काभ्यामालोकये[त्] लोकः कार्यजातमहर्निशम् ?** [प० २९-१]—नेत्राभ्याम् ।
**अपि बालनृपं राज्यं वर्त्तते कैर्दृढव्रतैः ?**—पात्रैः । एवं नपुंसके ॥

एता एव च क्रिया अतीतानागतयोरप्युदाहार्याः ।

**सेनापतिः पतिं ब्रूते नाथ केन जयस्यरीन् ?**—त्वया । एवं युष्मदि ।

पुनः पृच्छति—

**केनैताः संपदो नित्यं जायन्ते मे नवा नवाः ?**—मया । इत्यस्मदि ।

एवमन्या अपि सपल्लवाः करणोक्तयः ऊह्याः । एवं करणोक्तिः ॥ छ ॥

अथ केवलसंप्रदानविवक्षायामुदाह्रियते । यथा—'ए बेटी काहि देवि'—इयं कन्या कस्मै देया ?, उत्तरं श्लोकेन—

**सजातीयाऽसगोत्राय योग्याय गुणिनेऽर्थिने ।**
**मातापित्रोः पञ्चसप्तशाखान्तरितजन्मने ॥**

उपस्थितं महत् पर्व्व वित्तं न्यायार्जितं च मे ।
पृष्टः कस्मै ददामीति पात्रायेत्युत्तरं वदेत् ॥
यस्मै यद्रोचते विप्रास्तेन तत् कथ्यतामिह ।
इत्युक्त्वा वाञ्छितं तेभ्यो दत्तमक्षयमुच्यते ॥
यस्मै धारयते वित्तमात्तं संकल्पितं धृतम् ।   5
तस्मै तदखिलं दद्याद् ऋणशेषं न धारयेत् ॥
पात्रापात्रकथा देव-पितृकृत्ये विचार्यते ।
वित्ते सत्यर्थिने देयमिति मह्यं तु रोचते ॥
वृद्धौ मातापितरौ भार्यापत्यादिसन्ततिर्दासाः । [प० २९-२]
सजातिश्च दरिद्रः पोष्यास्तेभ्यः सदा देयम् ॥   10

ब्राह्मणेभ्योऽत्र दीयते । गम्यतां विप्राः, ब्राह्मण्यै ग्रासाच्छादनं दीयते । काले क्षेत्रे च पात्राय सर्व्वस्वमपि न धर्त्तव्यम् । विप्रेभ्यः परशुरामः पृथ्वीमेव प्रादात् । गयायां पित्रे पिण्डं सत्पुत्रः प्रदास्यते । एवमन्या अपि सपल्लवाः संप्रदानोक्तय ऊह्याः । इति संप्रदानोक्तिः ॥ छ ॥

अथ केवलापादानविवक्षायामुदाह्रियते । यथा – 'काहां हु(हुं)त ए पुरुषु आ' – कस्मादयं पुरुष आगतः ?, 'कनउजं' – कन्यकुब्जात् । 'मीत काहां हुंत एतें कालें' – सखे ! कुतस्त्वमियता कालेन ? । 'ववहरेकरिं कांटीं' – धनिकृकारायाः, व्यवहरककंटिकातो वा । 'कैसें तौ तो छूटेसि' – कथं तस्या मुक्तोऽसि ?, 'मीतकर लइ देइ' – मित्राद् गृहीत्वा दत्त्वा च । दुर्जनाद् भीतस्य वरं ससर्प्पव्याघ्रं वनम्, न तु ससर्प्पव्याघ्राद् वनाद् भीतस्य सदुर्जनग्रामवासः । सखे ! कुतोऽधीतवेदोऽसि ?– देवशर्मोपाध्यायात् । ज्ञातरन्धनविधिः कुतः ?– उपाध्यायिन्याः । ग्रासस्ते कुत आसीत् ?–द्विजवर्यगृहेभ्यः । चिरेण दृष्टान् शिष्यानाहूय गुरुः [प० ३०-१] पृच्छति – पुत्राः जानीथ कुतोऽधीतवेदा यूयम् ?, उत्तरम् – युष्मत्तः । पुनः पृच्छति – कुतः तर्ह्यस्माकं सपुत्रदाराणामिदानीं वृद्धावस्थानिर्वृत्तिः ?, उत्तरम् – अस्मत्तः । एवमन्या अपि लिङ्ग-संख्या-पुरुषभिन्ना अपादानोक्तय ऊह्याः । इत्यपादानोक्तिः ॥ छ ॥

अथाधिकरणविवक्षायामुदाह्रियते । तद्यथा –   25

भूमौ मर्त्यास्तिले तैलं तरुण्यां रूपसंपदः ।
आधेयं सर्व्वमाधारे निराधारो न विद्यते ॥
कस्मिन् देवगणा ननु(नु ?) नित्यम् ? – स्वर्गे ।
कुत्र सदा गृहिणां स्थितिरिष्टा ? – गृहे ।
भार्ये ! कुत्र रतिस्तव नित्यम् ? – त्वयि ।   30
भर्त्तः ! कुत्र सदैव मनो मे ? – मयि ।

**विद्वन्! भवतः कुत्र निवासः?–वाराणस्यां गङ्गातीरे।**
**कस्मिन् दानम्, कुत्र विवाहः?–द्विजवरवंशे नागरजातौ॥**
**सूपकर्त्ता स्थितः पीठे चुल्ल्यां स्थाल्यां महानसे।**
**ज्वलद्वह्नौ तप्ततोये मध्याह्ने तन्दुलान् पचेत्॥**

5 सप्ताधिकरणमुदाहरणम्। एवमन्या अप्यधिकरणोक्तय ऊह्याः। इत्यधिकरणोक्तिः॥ छ॥

अथ केवलसंबन्धोक्तावुदाह्रियते। यथा–

**कस्यैतद् गृहमुन्नतं क्षितिपतेस्तस्यैव राज्ञः पुनः,**
**सौवर्णाण्डकमण्डितोन्नतशिखं पश्यैतदस्यान्तिके।** [प० ३०-२]
**यस्येयं वसुधा सुधाधवलिता कीर्तिश्च शौर्यार्जिते(ता),**
10 **श्रीगोविन्दनृपस्य तस्य सुतरामायुश्चिरं वर्द्धताम्॥ छ॥**
**स्वर्गः सुराणां पाताललोकश्चैष फणाभृताम्।**
**श्रीमद्गोविन्दचन्द्रस्य निःशेषं वसुधातलम्॥**
**धनदस्य धनं भानोः प्रतापो धिषणागुरोः।**
**गोविन्दनृपतेस्त्वेतत् त्रयमप्यमितं मतम्॥**
15 **वद नीरप्रिये कस्य खड्गक्रीडार्जिताः स्त्रियः।**
**तव वल्लभ पूर्णेन्दुवदनो यः पित(पति°)र्मम॥ ९॥**

एवमन्या अपि लिङ्गादिविशिष्टसंबन्धस्योक्तय ऊह्याः। इति संबन्धोक्तिः॥ छ॥

एवमेकैकविवक्षायां नवैवोक्तयः। अथ द्व्याद्युक्तिभेदप्रस्तारार्थं वृत्तं सूत्रम्–

**आद्यमाद्यमितरेषु निक्षिपेदुक्तिभेदविषये द्वयोर्द्वयोः।**
20 **आद्यहीनयुगलेष्वथादिमं निक्षिपेत् त्रिचतुरादिभित्तये॥**

अयमर्थः–लिङ्गार्थः, क्रिया, कर्त्ता, कर्म्म, करणम्, संप्रदानम्, अपादानम्, [ अधिकरणम् ] संबन्धः–इत्यमी नव पदार्थाः। एषां चैकैकस्य संक्षिप्ता उक्तयो यथा–

कोऽयम्?–छात्रः। १॥
किं करोति?–पठति। २॥
25 कः पठति?–अयमेव। ३॥
किं पठति?–शास्त्रम्। ४॥
केन पठति?–पुस्तकेन। ५॥
कस्मै पठति?–आत्मने। ६॥
कुतः पठति?–उपाध्यायात्। ७॥ [प० ३१-१]
30 क्व स्थितः पठति?–गृहे। ८॥
कस्य?–उपाध्यायस्यैव। ९॥ एवं नव॥ *॥

द्वयोर्द्वयोश्चोक्त्यर्थमाद्यमाद्यमितरेषु द्वितीयादिषु योजयेत् । तद् यथा – प्रथमे लिङ्गार्थे द्वितीयादिषु योजिते या(जा)ता लिङ्गार्थेनाष्टौ भेदाः । यथा –

लिङ्ग-क्रिये । १ ॥
लिङ्ग-कर्त्तारौ । २ ॥
लिङ्ग-कर्मणी । ३ ॥ 5
लिङ्ग-करणे । ४ ॥
लिङ्ग-संप्रदाने । ५ ॥
लिङ्ग-अपादाने । ६ ॥
लिङ्ग-अधिकरणे । ७ ॥
लिङ्ग-संबन्धो(न्धौ) । ८ ॥ एवं लिङ्गार्थेनाष्टौ ॥ * ॥ 10

अथ द्वितीयां क्रियां त्रि(तृ)तीयादिषु निक्षिप्य कृताः सप्त भेदाः । यथा –

क्रिया-कर्त्तारौ । १ ॥
क्रिया-कर्मणी । २ ॥
क्रिया-करणे । ३ ॥
क्रिया-संप्रदाने । ४ ॥ 15
क्रिया-ऽपादाने । ५ ॥
क्रिया-ऽधिकरणे । ६ ॥
क्रिया-संबन्धाविति । ७ ॥
– एवं क्रियया सप्त, आद्यैः सह पञ्चदश ॥ १५ ॥

अथ त्रि(तृ)तीये कर्तरि चतुर्थादिषु योजिते षडुक्तयः । यथा – 20

कर्तृ-कर्मणी । १ ॥
कर्तृ-करणे । २ ॥
कर्तृ-संप्रदाने । ३ ॥
कर्तृ-अपादाने । ४ ॥
कर्तृ-अधिकरणे । ५ ॥ 25
कर्तृ-संबन्धाविति । ६ ॥
– एवं कर्त्रा षट् । पूर्वैः सहैकविंशतिः ॥ २१ ॥

अथ चतुर्थे कर्मणि पञ्चमादिषु क्षे(क्षि)प्ते पञ्चोक्तयः । यथा –

कर्म-करणे । १ ॥
कर्म-संप्रदाने । २ ॥ 30
कर्म-अपादाने । ३ ॥

कर्म-अधिकरणे । ४ ॥

कर्म-संबन्धाविति । ५ ॥

—एवं कर्मणा पञ्च, [प० ३१-२] पूर्वैः सह षड्विंशतिः ॥ २६ ॥

अथ पञ्चमे करणे अपादानादिषु योजिते चत्वारो भेदाः । यथा—

करण-संप्रदाने । १ ॥

करण-अपादाने । २ ॥

करण-अधिकरणे । ३ ॥

करण-संबन्धाविति । ४ ॥

—एवं करणेन सह चत्वारः, पूर्वैः सह तृं(त्रिं)शत् ॥ ३० ॥

अथ षष्ठे संप्रदाने सप्तमादिषु क्षिप्ते त्रयो भेदाः । यथा—

संप्रदान-अपादाने । १ ॥

संप्रदान-अधिकरणे । २ ॥

संप्रदान-संबंधाविति । ३ ॥

—एवं संप्रदानेन सह त्रयः, पूर्वैः सह त्रयस्त्रिंशत् ॥ ३३ ॥

अथ सप्तमे अपादानेऽष्टम-नवमयोः क्षिप्ते भेदद्वयम् । यथा—

अपादान-अधिकरणे । १ ॥

अपादान-संबन्धौ । २ ॥

—एवं अपादानेन द्वौ, पूर्वै[ः] सह पञ्चतृं(त्रिं)शत् ॥ ३५ ॥

अथाष्टमे अधिकरणे नवमे क्षिप्ते सत्येकः । यथा—

अधिकरण-संबन्धाविति । १ ॥

—एवमधिकरणेनैक एव, आद्यैः सह षट्त्रिंशत् । ३६ ॥

एवं द्वयोर्द्वयोर्विवक्षायां षट्त्रिंशदेवोक्तिभेदाः ॥ छ ॥

अथैषां क्रमेणोदाहरणानि, यथा—

'को ए काह कर'—कोऽयं किं कुरुते ?, छात्रोऽयं पठति । १ ।

'ए को इहां को पढ'—एष कः, कश्चेह पठति ?, छात्रोऽयमेष ये(ए)व । २ ।

'को ए काह इहां पढ'—क एष किमत्र पठति ?, छात्र[ः] शास्त्रम् । ३ ।

'को ए काहें पढ'—कोऽयं केन पठति ?, [प० ३२-१] छात्रः पुस्तकेन । ४ ।

'को ए का किहं पढ'—क एष कस्मै पठति ?, छात्रः स्वस्मै । ५ ।

'को ए का पास पढ'—क एष कुतः पठति ?, छात्र उपाध्यायात् । ६ ।

'को ए काहां पढ'—क एष कुत्र पठति ?, छात्रो गृहे । ७ ।

'को ए ककरें घरं पढ' – क एष कस्य गृहे पठति ?, छात्रो गुरोः । ८ ।

—एवं लिङ्गार्थेनाष्टावुक्तयः ॥ छ ॥

अथ क्रियया सप्त यथा –

'काह ईहां कीज केइ' – किमत्र क्रियते केन ?, पठ्यते छात्रेण । ९ ।

'काह करत ईहां काह पढिअ' – किं कुर्वताऽत्र किं पठ्यते ?, गुरुशुश्रूषां शास्त्रम् ।१०। 5

'काह करत काहें पढिअ' – किं कुर्वता केन पठ्यते ?, गुरुशुश्रूषां पुस्तकेन । ११ ।

'काह करत का किह पढिअ' – किं कुर्वता कस्मै पठ्यते ?, गुरुशुश्रूषां आत्मने । १२ ।

'काह करत का पास पढिअ' – किं कुर्वता कुतः पठ्यते ?, गुरुशुश्रूषामुपाध्यायात् । १३ ।

'काह करत काहा पढिअ' – किं कुर्वता कुत्र पठ्यते ?, गुरुशुश्रूषां गृहे । १४ ।

'काह करत काकरें पढिअ' – किं कुर्वता कस्य गृहे पठ्यते ?, गुरुशुश्रूषां गुरोः । १५ । 10

—एवं क्रियया सप्त ॥ छ ॥

अथ कर्त्रा षट् यथा –

'को ईहां काह पढ' – कोऽत्र किं पठति ?, छात्रः शास्त्रम् । १६ । [पृ० ३२-२]

'को काहें पढ' – कः केन पठति ?, छात्रः पुस्तकेन । १७ ।

'को ईहां का किहं पढ' – कोऽत्र कस्मै पठति ?, छात्र आत्मने । १८ । 15

'को ईहां का पास पढ' – कोऽत्र कुतः पठति ?, छात्र उपाध्यात् । १९ ।

'को ईहां काहां पढ' – कोऽत्र कुत्र पठति ?, छात्र आश्रमे । २० ।

'को ईहां ककरें आश्रम पढ' – कोऽत्र कस्याश्रमे पठति ?, छात्रो गुरोः । २१ ।

—एवं कर्त्रा षट् ॥ छ ॥

अथ कर्मणा पञ्चोक्तयो यथा – 20

'काह ईहां पढिअ काहे' – किमत्र पठ्यते केन ?, शास्त्रं पुस्तकेन । २२ ।

'काह पढिअ का किहं' – किं पठ्यते कस्मै ?, शास्त्रमात्मने । २३ ।

'काह पढिअ का पास' – किं पठ्यते कुतः ?, शास्त्रमुपाध्यायात् । २४ ।

'काह पढिअ काहां' – किं पठ्यते कुत्र ?, शास्त्रमास्र(श्र)मे । २५ ।

'काह पढिअ ककरें' – किं पठ्यते कस्याश्रमे ?, शास्त्रं गुरोः । २६ । 25

—एवं कर्म्मणा पंच ॥ छ ॥

अथ करणेन चतस्र उक्तयो यथा –

'काह ईहां पढिअ का किहं' – केनाऽत्र पठ्यते कस्मै ?, पुस्तकेन स्वस्मै । २७ ।

'काहें पढिअ का पास' – केन पठ्यते कुतः ?, पुस्तकेनोपाध्यायात् । २८ ।

'काहें पढिअ काहां' – केन पठ्यते कुत्र ?, पुस्तकेनाऽऽश्रमे । २९ । 30

'काहें पढिअ ककरें' – केन पठ्यते कस्याश्रमे ?, [पृ० ३३-१] पुस्तकेन गुरोः । ३० ।

—एवं करणेन चतस्रः ॥ छ ॥

अथ संप्रदानेन तिस्र उक्तयो यथा—

'का किहं पढिअ का पास'—कस्मै पठ्यते कुतः ?, आत्मन उपाध्यायात् । ३१ ।

'का किहं पढिअ काहां'—कस्मै पठ्यते कुत्र ?, आत्मने गृहे । ३२ ।

'का किहं पढिअ ककरें'—कस्मै पठ्यते कस्य गृहे ?, स्वस्मै गुरोः । ३३ ।

5 —एवं संप्रदानेन तिस्रः ॥ छ ॥

अथापादानेन द्वे यथा—

'का पास पढिअ काहां'—कुतः पठ्यते कुत्र ?, उपाध्यायाद् वाराणस्याम् । ३४ ।

'कातौ पढिअ ककरें घर'—कुतः पठ्यते गृहे कस्य ?, उपाध्यायाद् गुरोः । ३५ ।

—एवमपादानेन द्वे ॥ छ ॥

10 अथाधिकरणेनैकैवोक्तिर्यथा—

'काहां पढिअ ककरें घर'—कुत्र पठ्यते कस्य गृहे ?, वाराणस्यामुपाध्यायस्येति । ३६ ।

—एवमधिकरणेनैकैव ॥ छ ॥

एवं द्वयोर्द्वयोर्विवक्षायां षट्त्रिंशदेवोक्तयः । एवमेव त्रयाणां त्रयाणां विवक्षायां चतुरशीतिरुक्तयः । तदुत्पत्तिश्चैवम्—पूर्वोक्तद्विकेषु प्रथमं लिङ्गार्थं विना ये द्विका नवमादयस्ते-
15 ष्वाद्ये योजिते अष्टाविंशतिस्त्रिभेदा लिङ्गार्थेन भवन्ति । द्वितीयेन च धात्वर्थेन रहितेषु षोडशादिषु द्विकेषु द्वितीये जो(यो)जिते सत्येकविंशति-[ प० ३३-२ ] स्त्रिभेदा धात्वर्थेन भवन्ति । पूर्वैः सहैकोनपञ्चाशत् । ४९ । ततस्तृतीयेन कर्त्रा न(र)हितेषु द्वाविंशादिषु द्विकेषु तृतीये क्षिप्ते पञ्चदश त्रिभेदाः कर्त्रा भवन्ति । पूर्वैः सह चतुःषष्टिः । ६४ । ततश्चतुर्थेन कर्मणा रहितेषु सप्तविंशादिषु द्विकेषु चतुर्थे क्षिप्ते दश त्रिभेदाः कर्मणा भवन्ति । पूर्वैः सह चतुः-
20 सप्ततिः । ७४ । ततः पञ्चमेन करणेन रहितेषु त्रिंशादिद्विकेषु पञ्चमे क्षिप्ते षट् त्रिभेदाः करणेन भवन्ति । पूर्वैः सहाशीतिः । ८० । ततः षष्ठेन संप्रदानेन रहितेषु चतुस्त्रिंशादिषु षष्ठे क्षिप्ते त्रयस्त्रिभेदाः संप्रदानेन भवन्ति । पूर्वैः सह त्र्यशीतिः । ८३ । ततः सप्तमेनापादानेन रहिते षट्त्रिंशद् द्विके सप्तमे क्षिप्ते अपादानेनैकस्त्रिभेदः । पूर्वैः सह चतुरशीतिः । ८४ । अनेनैव च क्रमेण चतुरादीनामपि पूर्वोक्तसंख्याभेदोत्पत्तिर्ज्ञेया । ग्रन्थविस्तरभयात्
25 नैकैकमुदाहरणमादिभेदानां दर्श्यते । तद् यथा—तत्र त्रिविकल्पार्थं पूर्वपूर्वेण सहानन्तरयोर्विवक्षायां सप्तोक्तयः । यथा—[ प० ३४-१ ]

'को ए ईहां, को काह कर'—कोऽयमत्र कश्च किं करोति ?, छात्रोऽयमसावत्र पठति । १ ।

'काह करत को ईहां काह पढ'—किं कुर्वन् कोऽत्र किं पठति ?, गुरुसेवां छात्रः शास्त्रम् । २ ।

'ईहां को काह काहें पढ'—अत्र कः किं केन पठति ?, छात्रः शास्त्रं पुस्तकेन । ३ ।

'काह काहें का किह छात्र पढ' – किं केन कस्मै छात्रः पठति ?, शास्त्रं पुस्तकेनात्मने । ४ ।

'काहें का किंह का पास छात्र ईहां पढ' – केन कस्मै कुतश्छात्रोऽत्र पठति ?,

–पुस्तकेनात्मने गुरोः । ५ ।

'का किंह का पास काहां छात्र ईहां पढ' – कस्मै कुतः कुत्र छात्रोऽत्र पठति ?,

–आत्मने उपाध्यायाद् आश्रमे । ६ । 5

'का पास काहां काकरें मढ छात्र ईहां पढ' – कुतः कुत्र कस्य मठे छात्रोऽत्र पठति ?,

–उपाध्यायात् केदारस्य मठे । ७ ।

–एवमन्या अपि त्रिविवक्षोक्तयश्चतुरशीतिसंख्याः प्रयोज्याः ॥ छ ॥

अथ चतुर्णां विवक्षायामुक्तयो लिख्यन्ते – तत्र पूर्वेण पूर्वेणानन्तरेषु त्रिषु युक्तेषु षडु-क्तयः । यथा – 10

'को ए काह करत को ईहां काह कर' – कोऽयं किं कुर्वन् कोऽत्र किं पठति ?,

–छात्रोऽयं गुरुसेवामसावत्र शास्त्रम् । १ ।

'काह करत को काह कर काहें' – किं कुर्वन् कः किं पठति केन ?,

–गुरुसेवां छात्रः शास्त्रं पुस्तकेन । २ ।

'को ईहां काह पढ काहें का किह' – कोऽत्र [प० ३४-२ ] किं पठति केन कस्मै ?, 15

–छात्रः शास्त्रं पुस्तकेनात्मने । ३ ।

'काह काहें का किह का पास छात्र [ईहां] पढ' – किं केन कस्मै कुतः छात्रोऽत्र पठति ?,

–शास्त्रं पुस्तकेनात्मने उपाध्यायात् । ४ ।

'काहें का किंह का पास काहां छात्रु [ईहां] पढ' – केन कस्मै कुतः कुत्र छात्रोऽत्र पठति ?,

–पुस्तकेनात्मने गुरुतो मठे । ५ । 20

'का किहं का पास काहां काकरें छात्र पढ' – कस्मै कुतः कुत्र कस्य मठे छात्रः पठति ?,

–आत्मने पण्डिताद् वाराणस्यां केदारस्य । ६ ।

–एवमन्या अपि चतुर्विवक्षोक्तयः षड्विंशत्यधिकशतसंख्याः प्रयोज्याः ॥ छ ॥

अथ पञ्चानां विवक्षायामुक्तयो लिख्यन्ते । तत्र, पूर्व्वेण पूर्व्वेणानन्तरेषु चतुर्षु युक्तेषु पञ्चोक्तयः । यथा – 25

'को ए काह करत ईहां को काह कर काहें' – कोऽयं किं कुर्व्वन्नत्र कः किं करोति केन ?,

–छात्रोऽयं गुरुसेवां पठत्यत्र पुस्तकेन । १ ।

'को ईहां काह करत काह पढ काहें का किहं' – कोऽत्र किं कुर्व्वन् किं पठति केव कस्मै ?,

–छात्रो गुरुसेवां शास्त्रं पुस्तकेनात्मने । २ ।

'को ईहां काह पढ काहें का किंह का प(पा)स' – कोऽत्र किं पठति केन कस्मै कुतः ?,
– छात्रः शास्त्रं पुस्तकेनात्मने पण्डितात् । ३ ।

'छात्रु ईहां काह पढ काहें का किंह का [प० ३५-१] पास काहां' – छात्रोऽत्र किं पठति केन कस्मै कुतः कुत्र ?, शास्त्रं पुस्तकेनात्मने पण्डिताद् वाराणस्याम् । ४ ।

5 'काहें का किह का पास काहां काकरें घर छात्र [ ईहां ] पढ' – केन कस्मै कुतः कुत्र कस्य गृहे छात्रोऽत्र पठति ?, पुस्तकेनात्मने पण्डितात् कन्यकुब्जे गुरोः । ५ ।

– एवमादयो अन्या अपि पञ्चविवक्षोक्तयः षड्विंशशतसंख्याः प्रयोज्याः ॥

अथ षण्णां विवक्षायामुक्तयो लिख्यन्ते । तत्र, पूर्व्वेण पूर्व्वेण परेषु पञ्चसु युक्तेषु चतस्र उक्तयः । यथा –

10 'को ए काह करत को ईहां काह पढ कांहें का किंह ?' – कोऽयं किं कुर्व्वन् कोऽत्र पठति केन कस्मै ?, छात्रोऽयं गुरुसेवामयमत्र शास्त्रं पुस्तकेनात्मने । १ ।

'को ईहां काह करत काह पढ काहें का किंह का पास' – कोऽत्र किं कुर्व्वन् किं पठति केन कस्मै कुतः ?, छात्रो गुरुसेवां शास्त्रं पुस्तकेनात्मने पण्डितात् । २ ।

'को ईहां काह पढ काहें कां किंह का पास काहां' – कोऽत्र किं पठति केन कस्मै कुतः
15 कुत्र ?, छात्रः शास्त्रं पुस्तकेनात्मने पण्डितात् प्रयागे । ३ ।

'छात्र ईहां काह पढ काहें का किह का पास काहां ककरें घर' – छात्रोऽत्र किं पठति केन कस्मै कुतः कुत्र कस्य गृहे ?, शास्त्रं पुस्तकेनात्मने पण्डितात् प्रयागे [प० ३५-२] द्विजस्य । ४ ।

– एवमादयो अन्या अपि षड्विवक्षोक्तयश्चतुरशीतिसंख्याः प्रयोज्याः ॥ छ ॥

20 अथ सप्तानां विवक्षायामुक्तयो लिख्यन्ते । तत्र, पूर्वेण पूर्वेणानन्तरेषु षट्सु युक्तेषु तिस्र उक्तयः । यथा –

'को ए काह करत को ईहां काह पढ कांहें कां किंह का पास' – कोऽयं किं कुर्वन् कोऽत्र किं पठति केन कस्मै कुतः ?, छात्रोऽयं गुरुसेवामसौ शास्त्रं पुस्तकेनात्मने पण्डितात् । १ ।

'काह करत को ईहां काह पढ केई का किंह का पास कांहां' – किं कुर्वन् कोऽत्र किं
25 पठति केन कस्मै कुतः कुत्र ?, गुरुसेवां छात्रः शास्त्रं पुस्तकेनात्मने पण्डितादाश्रमे । २ ।

'को ईहां काह पढ काहें कां किंह का पास काहां ककरें' – कोऽत्र किं पठति केन कस्मै कुतः कुत्र कस्य ?, छात्रः शास्त्रं पुस्तकेनात्मने पण्डितादाश्रमे ब्राह्मणस्य । ३ ।

– एवमादयो अन्या अपि सप्तविवक्षोक्तयः षट्त्रिंशत्संख्याः प्रयोज्याः ॥ छ ॥

अथाष्टानां विवक्षायामुक्तयो लिख्यन्ते । तत्र, पूर्वेण परेषु सप्तसु युक्तेषु द्वे उक्ती यथा –

'को ए काह करत को ईहां काह पढ काहें का किह का पासु काहां' – कोऽयं किं [प० ३६-१] कुर्वन् कोऽत्र किं पठति केन कस्मै कुतः कुत्र ?, छात्रोऽयं गुरुसेवां अयमत्र शास्त्रं पुस्तकेनात्मने पण्डितादालये । १ ।

'काह करत को ईहां काह पढ [ काहें ] का किंह का पास काहां ककरें' – किं कुर्वन् कोऽत्र किं पठति केन कस्मै कुतः कुत्र कस्य ?, गुरुसेवां छात्रः शास्त्रं पुस्तकेनात्मने पण्डितादालये द्विजस्य । २ । 5

– एवमादयो अन्या अपि अष्टविवक्षोक्तयो नवसंख्याः प्रयोज्याः ॥ छ ॥

नवानां विवक्षायामेकैवोक्तिः । यथा –

'को ए काह करत को काह पढ काहें का किहं का पास काहां ककरें' – क एष किं कुर्वन् कः किं पठति केन कस्मै कुतः कुत्र कस्य ?, छात्रोऽयं गुरुशुश्रूषामसौ शास्त्रं पुस्तकेनात्मने पण्डितादाश्रमे ब्राह्मणानाम् । १ । 10

एवमत्रोक्तीनामेकादित एकाशीतिर्दर्शिता । अनेनैव च क्रमेण पञ्चशतान्येकादशोत्तराणि प्रयोज्य बालानां दर्शयितव्यानि ।

आमन्त्रणपदविवक्षायां चैता उक्तयस्तत्सहिताः प्रयोज्याः । यथा – 15

'अहो को तुं' – भोः कस्त्वम् ?, देवदत्तोऽहमित्यादि ॥ छ ॥

अथ दशानामप्यर्थानामुक्ति-प्रत्युक्ती भुजङ्गप्रयाताभ्यां यथा –

**सखे ब्रूहि कस्त्वं चिरं किं च कुर्वन्**
**लिखेत् कः किमत्रेदृशं केन कस्मै ।** [प० ३६-२]
**कुतः कुत्र कस्येति लोकोक्तिरेषा** 20
**यदैकत्र वाच्ये दशानां विवक्षा ॥**
**अहं विप्रपुत्रः पठन्नेव शास्त्रं**
**लिखामि स्वयं पाणिनैवात्मने स्वात् ।**
**गुरोः प्राप्य तिष्ठन् गृहेऽस्यैव रम्ये**
**प्रयोगप्रकाशं य(ज)गत्स्वार्थहेतुम् ॥** 25

इदमुक्तिव्यक्तिशास्त्रं प्रयोगप्रकाशापरनामधेयमित्यर्थः । सविशेषणेषु च विवक्षितेषु तत्सहिताः प्रयोज्याः । यथा –

'को ए मुंडें मुंडे दीर्घी चूलीं धोती परिहें' – कोऽयं मुण्डितमुण्डो दीर्घचूडः परिहितधौतवस्त्रः ?, विद्यार्थी ।

'कैसें काह करत, को कस इहां, कैसें काह पढ, कैसें काहे, कैसें का किंह, कैसे हि काहितौ, कैसें ककरें, कैसें काहां'—कथं किं कुर्व्वन्, कः कीदृशोऽत्र, कथं किं पठति, कीदृशेन केन, कीदृशाय कस्मै, कीदृशात् कस्मात्, कीदृशे कस्मिन्, कीदृशस्य कस्य।

सारदं कुरु ( सादरं गुरु?-)सेवामसौ विद्यार्थी स्वाचारः सुस्पष्टामुक्तिव्यक्तिं शुद्धेन 5 पुस्तकेनान्वयार्थिने स्वस्मै शिष्यहिताद् गुरोर्निरुपद्रवे गृहे अस्यैवोपकारशीलस्येति ॥ छ ॥

एते च लिङ्गार्थादयो विवक्षाक्रमेण छन्दोनुरोधेन च यथेष्टमपि प्रयोज्याः, नतूक्तक्रमेणैव।

एतस्मादर्थदशकाच्च बाह्य एकादशोऽर्थो वेदेषु [प० ३७-१] शास्त्रेषु लोकेषु वा क्वापि नास्त्येव प्रायः, तस्य प्रयोगा दर्शनात्। एतानि च दशपदानि मूलानि कृत्वा, य एषां पल्लवाः—कालभेदजा आख्यातिककार्त्त-प्रत्ययार्थ-विशेषभावाद् लिङ्ग-संख्या-पुरुषभेदकृता 10 उक्तानुक्तत्वनिबन्धना विशेषण विशेष्यभावभाविनस्ते च नियतसंख्या अप्यनियतसंख्या एव। लोकोक्तिभङ्गीनामपरिसंख्येयत्वात्। किन्तु मूलमाश्रित्य विवक्षा भवति। तच्च दशविधमेव। तदनुगताश्च पल्लवा विवक्षिता अविवक्षिता वा यथेष्टं प्रवर्तन्त एव। अत एकादशोत्तराणि पञ्चशतान्येवोक्तीनामित्युक्तम्। एवं स्थिते त्रि(तृ?)तस्यादि-त्यादयो दर्शितलिङ्गानुशासनाश्च बाला यथाप्रज्ञमेक-द्व्यादि विवक्षाक्रमेणोक्तिं शिक्षयितव्याः। ततो ज्ञातनिःशेषोक्तिभेदाः 15 संस्कृतं जानन्त्येव परम्। तथा च सति यदि विशेषसंस्कारार्थं शब्दशास्त्रं श्रा(श्रा)व्यन्ते तदा को दोषः। किं च तदा तत् तेषां सुखग्राह्यं भवति। गुरुरपि चानायासेनैव बोधयत्यचिरेण च। इतरथा तु स्यादित्याद्योर्लिङ्गानुशासनानां च निर्माणमभ्यसनं च निरर्थकमेव। अकृत-तदाभ्यासानामपि शब्दशास्त्रस्य जा(या)वज्जीवाभ्यासेन [प० ३७-२] तदर्थावगमदर्शनात्। न च कृततदभ्यासानां ज्ञातशब्दशास्त्राणामभ्यस्ततर्कमीमांसार्थशास्त्रशा(सा)हित्यानामपि लेखपत्रादिषु 20 लोकव्यवहारोपयुक्तेषु [अ]नभ्यस्तोक्तिप्रकाराणां प्रावीण्यं कदाचनापि भवति। दृश्यन्ते हि सर्वज्ञा अपि छान्दसवदितरजनवद् वा तदर्थं तदभिव्यक्तमभ्यर्थयन्तः, इतरजनेषु पठितमूर्ष-(र्ख)व्यपदेशभाजश्च। उक्तिप्रकाराभिज्ञास्त्वज्ञातेतरशास्त्रा अपि लोकव्यवहारं प्रवर्त्य(र्त)-यन्तो राजगृहादिषूपादेया दृश्यन्त एव। अतः शास्त्रस्य प्रथमं दृष्टफलं लोकव्यवहार एव। अत एवैतच्छास्त्रं कृतम्। तस्माद् उक्तिव्यक्तिं बालाः शिक्षयितव्या एव ॥ छ ॥

25 ॥ इत्युक्तिव्यक्तिविवृतावुक्तिभेदव्याख्या ॥

ॐ

